सेनापरिचितः, कलानिष्णातः, समाजशास्त्री, लोकाचारज्ञः, अर्थशास्त्री, कामशास्त्रज्ञः धर्मशास्त्री च आसीत्।

**वेदव्यासस्य रचना-**

महाभारतं भारतीयसभ्यतायाः संस्कृतेश्च भव्यस्वरूपबोधाय ग्रन्थरत्नमिदमावश्यकम्। भगवदगीता-विष्णुसहस्रनाम-अनुगीता-भीष्मस्तवराज-गजेन्द्रमोक्ष-संज्ञकं चरत्नप्रदानादेवास्य पञ्चमवेदता। धर्मार्थकाममोक्षविषयकसम्यक् प्रबोधोऽत्रैव द्रष्टुं शक्यते। महाभारते लक्ष्यैकश्लोकाः सन्ति। अस्य ग्रन्थस्य मौलिकं रूपं जयनाम्ना प्रसिद्धम्। पर्वणि विभक्तमिदं ग्रन्थम्। यथा-

आदि-सभा-वन-विराट्-उद्योग-भीष्म-द्रोण-कर्ण-शल्य-सौप्तिक-स्त्री-शान्ति-अनुशासन-

अश्वमेध-आश्रमवासी-मौसल-महाप्रस्थानिक-स्वर्गारोहणाभिधपर्वाणि तानि च अष्टादशसंख्यकानि।

**वेदव्यासस्य काव्यशैली-**

महाभारते कविना भौतिकजीवनस्य निःसारता एवोट्टङ्किता। मोक्ष एव ज्यायान्। न केवलमिदं काव्यमपि तु अर्थशास्त्रं कामशास्त्रं च। यथा स्वयं भगवान् वेदव्यासः-

**'अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत्।**
**कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना॥'**

• • •

## 34. रत्नाकरः-( 900 )

**रत्नाकरस्य समयः-**

पञ्चाशत् सर्गनिबद्धं बृहत्कायं खलु हरविजयं नाम महाकाव्यं 850 मितख्रीष्टसंवत्सरस्य समीपवर्तिनि काले किल 'रत्नाकरः' चकार।

**रत्नाकरस्य देशः/जीवनवृत्तम्-**

हरविजयप्रणेता महाकवी रत्नाकरः कश्मीरानलङ्कृतवान्। अस्य पितुर्नाम अमृतभानुरित्यासीत्। रत्नाकरस्य आश्रयभूतो राजा चिप्पटजयादित्य आसीत्। रत्नाकरोक्त्या स राजा बालबृहस्पत्युपाधिक आसीत्, यतोऽसौ-'बालबृहस्पत्यनुजीविनः' इति स्वविषये लिखति। चिरजीविना रत्नाकरेण जयादित्यानन्तरं सम्राडवन्तिवर्माऽऽश्रितो यथोक्तम्-

**'मुक्ताकणः शिवस्वामी कविरानदवर्धनः।**
**प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥'**

अवन्तिवर्मा च 855 तः 884 पर्यन्तं राज्यं कृतवान् अतो रत्नाकरस्य समयः नवमशतेवर्तित्वं सुप्रतीतम्।

**रत्नाकरस्य रचना-**

रत्नाकरस्य रचना-हरवजयकाव्यं संस्कृतकाव्येषु परिमाणतो गुणतश्च श्रेष्ठं मन्यते। अत्र

पञ्चाशत् सर्गाः सन्ति 4321 संख्यकानि च पद्यानि विद्यन्ते। रत्नाकरस्य समये माघस्य महती ख्यातिरासीत्, माघस्य प्रसिद्धिमालोक्य तत्प्रतिस्पर्धयेव रत्नाकरेण हरविजयं प्रणीतम्।

### रत्नाकरस्य काव्यशैली-

कल्हणेनास्य काव्यस्योल्लेखः कृतः, अलकेनात्र व्याख्या लिखिता, क्षेमेन्द्रेणात्र प्रयुक्ताया वसन्ततिलकायाः प्रशंसा कृता। कविना शास्त्रीयपाण्डित्यस्य पराकाष्ठा प्रदर्शिता।

• • •

## 35. हर्षवर्द्धनः-( 700 )

### हर्षवर्द्धनस्य समयः-

शास्त्रीयपद्धतिमाश्रित्य विरचितेषु दृश्यकाव्येषु सम्राजो हर्षवर्द्धनस्य 'रत्नावली' नाम दृश्यकाव्यमेकं श्रेष्ठं दृश्यकाव्यमस्ति। तच्छ्रेष्ठतायाः कारणमिदमस्ति यत् मत्र तेषामुदाहरणानां संख्याधिकतमा वर्तते, अर्थात् नाट्यशास्त्रं कस्यचन रूपकस्य विशिष्टतायाः प्रदर्शनाय अपेक्षते। महाराजहर्षवर्द्धनः प्रभाकरवर्धनाद् यशोमत्यामजनि। अस्य भ्राता राज्यवर्धनः कनिष्ठा भगिनी च राज्यश्रीः आस्ताम्। दुर्दैववशाद्राज्यवर्धनः शशाङ्कनामकेन वङ्गीयनृपतिना छलेन निहतः। तदनन्तरं हर्षवर्धनो राजा वभूव। अस्य राजधानी स्थाण्वीश्वरनामकं स्थानमासीत्। अस्य राज्यकालः 606-647 ख्रीष्टाब्दमासीदिति प्रतीतम्।

### हर्षवर्द्धनस्य देशः-

अस्य राजधानी 'स्थाण्वीश्वर'नामकं स्थानमासीत्। हर्षवर्द्धनः प्रभाकरवर्धनस्य कनिष्ठपुत्रः आसीत्। तस्य अग्रजः राज्यवर्धनः आसीत्। हर्षवर्धनस्य भगिनी राज्यश्री आसीत्।

### हर्षवर्द्धनस्य जीवनवृत्तम्-

पञ्चनदप्रदेशे बहूपद्रवतो हूणान् पराजेतुं प्रेषिते भ्रातरि तमनुगच्छन्नयं मध्येमार्गं पितुरस्वास्थ्यं श्रुत्वा राजधानीं परावृत्तः सन् पितुर्मरणे जाते तदौर्ध्वदेहिकं कृत्वा यावद् भ्रातुरागमनं राज्यं शशास, आगते च तस्मिंस्तद्राज्यं भरतो रामायेव तस्मै प्रतिपादयामास। दुर्दैववशाद्राज्यवर्धनः शशाङ्कनामकेन वङ्गीयनृपतिना छलेन निहतः। तदनन्तरं हर्षवर्धनो राजा वभूव। अस्य राजधानी स्थाण्वीश्वरनामकं स्थानमासीत्। अस्य राज्यकालः 606-647 ख्रीष्टाब्दमासीदिति प्रतीतम्। तस्य शैल्या विशिष्टतेयं यत् तत्र चित्रात्मकानां ध्वन्यात्मकानाञ्च पदानां प्रयोगोऽभ्युपगतः। तधुरभावनाभिव्यक्त्यर्थं वैदर्भी ह्यपेक्ष्यते।

### हर्षवर्द्धनस्य रचना-

हर्षवर्द्धनस्य रूपकत्रयं प्रथते-1.रत्नावली,2.प्रियदर्शिका,3.नागानन्दञ्च। त्रिष्वपि रूपकेषु प्रस्तावनायां हर्षस्य नाम स्मर्यते, एतेनैषामेककर्तृकत्वं सिद्धम्।पद्यमेकं रत्नावलीप्रियदर्शिकयोः समानम्,पद्यद्वयं च प्रियदर्शिकानागानन्दयोः समानमिति समाना शैली, कथावस्तुसादृश्यं चेति सर्वं मिलित्वा त्रयाणामपि रूपकाणामेककर्तृकत्वं व्यवस्थापयति।

1. रत्नावली–रत्नावल्या: कथावस्तु उदयनसागरिकयो: प्रणयपाधारीकरोति। पोतभङ्गेन दुरवस्थतां गमिता रत्नावलीनाम्ना स्वमप्रख्याप्य सागरिकानाम्ना उदयनराजभवने प्रविश्य तन्महिष्या वासवदत्तया दासी बभूव। उदयनसागरिकयोरनुरागे विदिते पतिसुखकामनया स्वसुखं विहाय वासवदत्ता तयोर्विवाहमनुमेने। नाटिकाया नायक: उदयनो धीरललितनायक: अस्ति। तस्य चरित्रे विलासिता,प्रेमपरता,कलाप्रियता,प्रणयपरायणता च दृश्यन्ते। रत्नावली स्वीयेन गुणगणेन प्राचीनकालादेव प्रसिद्धा। शास्त्रीयपद्धतिमाश्रित्य प्रणीतमिदं रूपकमिति हेतुना दशरूपकेऽतीवादरोऽस्या जात:। श्रीहर्ष: आदर्शभूतं कथानकमाश्रित्य भव्यं रूपकमिदं कृतवान् यदुदाहरन्ति यथाप्रसङ्गं रीतिकृत:।
2. प्रियदर्शिका–प्रियदर्शिकायामुदयनारण्यिकयो:प्रणयकथा वर्णिता विद्यते। कथानक-मिदंरत्नावलीकथानकच्छायानुहार्येव।
3. नागानन्द–नागानन्दे जीमूतवाहनस्य यशो गीतम्। नाटकेऽस्मिन् बौद्धहिन्दुधर्मयोरतिमधुरा संसृष्टिरस्ति।

**हर्षवर्द्धनस्य काव्यशैली–**

श्रीहर्षवर्धनस्य काव्यशैलीसरला सुबोधा वैदर्भीपरिष्कृता वर्तते। वर्णनस्य स्वाभाविकता विशदता च हृदयमाकर्षत:। रोमाञ्चकदृश्यकाव्यस्य यावन्ति कमनीयान्युपकरणानि सम्भवन्ति तेषां सर्वेषां प्रयोगेऽयं सदा जागरूक:। वर्णनचातुरी चास्य सर्वमनोहरा। श्रीहर्षनृपतिरयं रूपकरचनायां कालिदासमनुकुर्वन्निव प्रतीयते। भवभूतिरस्य गर्भाङ्कयोजनामनुहरतीति गौरवमप्यस्य महत्त्वं गमयति। अस्य संस्कृतभाषाऽप्रश्लथा,श्लिष्टा शिष्टैकप्रयुक्ता च,अलङ्कारैस्तदलङ्करणं च यथोचितं लोचना-सेचनकं च चकास्ति। सत्यपि च उपज्ञाया: स्वल्पे वर्णनशक्तिस्त्वस्मिन् महती विद्यते, शैली चैतत्सर्वकृतीनामेकरसमसृणा पाठकमनो रमयतितराम्। शब्दालङ्कारेषु श्लेषोऽपि कवये रोचते।

● ● ●

चौखम्बा प्रतियोगिता प्रकाश

# नंदिनी

## (संस्कृत)

**टी.जी.टी./पी.जी.टी.**
**डी.एस.एस.एस.बी. एवं अन्य राज्यों**

द्वारा आयोजित अध्यापक भर्ती परीक्षा एवं
अध्यापक पात्रता परीक्षा (टी.ई.टी.-संस्कृत) हेतु

संस्कृत भाषा एवं साहित्य के वस्तुनिष्ठ एवं
निबन्धात्मक प्रश्न तथा आदर्श प्रश्न-पत्रों सहित

लेखक
डॉ. विश्वम्भर दयालु

पृष्ठ संख्या 480 मूल्य ₹ 250

अन्य प्राप्तिस्थान

**चौखम्बा पब्लिशिंग हाउस**
4697/2, 21-ए, अंसारी रोड
दरियागंज, नई दिल्ली 110002
दूरभाष : 23286537

**चौखम्बा सुरभारती प्रकाशन**
के. 37/117 गोपालमन्दिर लेन
वाराणसी 221001
दूरभाष : 2335263